**र्घप्लुतः १।२।२७॥** उश्च ऊश्च ऊ३श्च वः । वां कालं इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा । **उच्चैरुदात्तः १।२।२९॥ नीचैरनुदात्तः १।२।३०॥ समाहारः स्वरितः १।२।३१॥** स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा । **मुखनासिकावचनोऽनुनासिकः १।१।८॥** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश, तस्य दीर्घाभावात् । एचामपि द्वादश, तेषां ह्रस्वाभावात् । **तुल्यास्यप्रयत्नं सवर्णम् १।१।९॥** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । ( ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तो-

---

१ एकमात्रकद्विमात्रकत्रिमात्रकाणां उकाराणाम् । २ ताल्वादिषु सभागेषु स्थानेषु ऊर्ध्वभागे प्रतिहतवायुना व्यञ्जितः अच् उदात्तसंज्ञक इत्यर्थः । एवमेव नीचैः स्थाने अनुदात्तसंज्ञको ज्ञेयः । ३–१ ह्रस्वउदात्तः २ ह्रस्वोऽनुदात्तः ३ ह्रस्वस्वरितः; । ४ दीर्घउदात्तः ५ दीर्घोऽनुदात्तः ६ दीर्घस्वरितः । ७ प्लुत उदात्तः, ८ प्लुतोऽनुदात्त. ९ प्लुतः स्वरितः । एवं नवविधः नवप्रकारक इत्यर्थः । ४–उपर्युक्तनवप्रकारस्य प्रत्येकमनुनासिकाननुनासिकभेदेन । ५–एओ ऐऔ एतेषाम् । ६–आस्ये भवं आस्यम् । ७–सूत्रस्थास्यपदस्य ताल्वादिस्थानमर्थः प्रयत्नशब्दस्य आभ्यन्तरप्रयत्नश्च । ८–एतच्च प्रशब्दबलाल्लभ्यते ॥ तुल्यास्यं किं “ तर्प्ता ” अत्र पकारस्य तकारे परे झरोझरीति लोपो माभूत् । ९ कुनाम कखगघङाः एवमेव चुटुतुपु इत्यनेन तत्तद्वर्गस्था वर्णा ग्राह्याः । १० नासिका चेति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते ।

ष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो वाह्यश्च । आद्यः पञ्चधा, । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । वाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तस्थाः । शल ऊष्माणः । अचः स्वराः । ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ᳶप ᳶफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनुस्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाऽप्रत्ययः १।१।६९॥** प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाऽण् परेण णकारेण। कु चु टु तु पु एते उदितः । तदेवम् । अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला

---

१ भाष्यमतानुसारेणेदम् । २ चकारेण अचोऽपि महाप्राणः । ३ आदेशादौ सवर्णग्रहणवारणाय अप्रत्यय इति । ४ अविधीयमान इति विशेषणमण् इत्यस्यैव न उदिदित्यस्य अतएव ' स्तोः श्चुना श्चुः, चोः कुः, कुहोश्चुः ' इत्यादावादेशे उदित्करणेन सवर्णा गृह्यन्ते तेन अविधीयमानोऽण् उदिच्च विधीयमानोऽपि सवर्णस्य बोधक इति भाष्यार्थः । [illegible] लण्सूत्रे भाष्ये ।

द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ **परः सन्निकर्षः संहिता १।४।१०९॥** वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ **हलोऽनन्तराः संयोगः १।१।७॥** अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥**सुप्तिङन्तं पदम् १।४।१४॥** सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ **इति संज्ञाप्रकरणम् ॥**

## ॥ अथाच्सन्धिप्रकरणम् ॥

**इको यणचि ६।१।७७** इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥ **तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६॥** सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ॥ **स्थानेऽन्तरतमः १।१।५०॥** प्रसंगे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते । **अनचि च ८।४।४७॥**

---

१ 'यस्मात्प्रत्ययविधि'-'येन विधि' इत्याभ्यां सिद्धया, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण' मिति परिभाषया 'सुप्तिङ्' इत्यनेनैव सुबन्तं तिङन्तं इत्यर्थे सिद्धे अन्तग्रहणं 'संज्ञायां प्रत्ययग्रहणे तदन्तग्रहणं नास्ती' ति ज्ञापनार्थम् ॥ सुपः पकारेण महिङोङकारेण च सुप्तिङौ प्रत्याहारौ व्याख्यानतो विशेषप्रतिपत्तेः । २ 'षष्ठी स्थाने योगा' इति परिभाषया 'इकः' इति अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेन युज्यते अतआह इकः स्थाने इति तेन इउऋऌ एतेषामुच्चारणप्रसङ्गे यवरल एतेषामुच्चारणं कार्यं।अचि परत इत्यर्थः।संहितायां इत्यधिकारः। ३ 'षष्ठी स्थाने योगा' इत्यतः स्थाने इत्यनुवर्तमाने अत्र स्थाने ग्रहणं 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो' यथा स्यादित्येतदर्थम् । तेन चेता तातो इत्यादौ इदुतोः स्थाने न अकारः किन्तु स्थानिसाम्यादेकारौकाराविति बोध्यम् । ४ 'अचो रहाभ्यां द्वे' इति सूत्रात् 'अच्' इति 'द्वे' इति च 'यरोनुनासिकेनुनासिको वा' इति सूत्रात् 'यर' इति 'वा' इति च चत्वारि पदान्यनुवर्त्य यथायोग्यं योजयन्नाह अचः परस्येति ।

अचः परस्य यरो द्वे वा स्तो नत्वचि ॥ **झलां जश् झशि ८।४।५३॥** स्पष्टम् । इति धकारस्य दकारः ॥ **संयोगान्तस्य लोपः ८।२।२३॥** संयोगान्तं यत्पदं तस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य १।१।५२॥** षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते ( यणः प्रतिषेधो वाच्यः ) सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः ॥ **एचोऽयवायावः ६।१।७८॥** एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम् १।३।१०॥** समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ॥ **वान्तो यि प्रत्यये ६।१।७९॥** यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् । ( अध्वपरिमाणे च ) गव्यूतिः ॥ **अदेङ् गुणः १।१।२॥** अत् एङ् च गुणसंज्ञः स्यात् ॥ **तपरस्तत्कालस्य १।१।७०॥** तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥

---

१ अत्र लाघवाद् हलीति वक्तव्ये प्रसज्यप्रतिषेधोऽयं यथा स्यादित्याशयेनाह नत्वचीति तेन वाक्क् वाक् इत्यवसानेऽपि द्वित्वं भवतीति बोध्यम् । २ 'नश्चापदान्ते' त्यादिसूत्रे अपदान्ते इति भागे संयोगान्तलोपानिर्देशात् संयोगान्तं यत्पदमित्युक्तम् । तेन गोमान् गोमन्तौ इत्यत्र तल्लोपालोपौ ज्ञेयौ । ३ 'येन विधिः' इत्यत्र पठितया 'यस्मिन्विधिस्तदादावल्ग्रहणे' अल् ग्रहणे सप्तम्यन्ते विशेषणीभूते यो विधिर्विधीयते स तदादौ ज्ञेयः । तदन्तविधेरपवाद एवायम् ॥ इति परिभाषया लब्धार्थमाह यकारादाविति । ४ व्याख्यानात् तपरपदे बहुव्रीहितत्पुरुषसमासावभिप्रेत्याह तः परो यस्मात्स च तात्परश्चेति। आद्योदाहरणं तु 'अतोभिस' इत्यादि अन्योदाहरणं तु वृद्धिरादैच् इत्यादि । तेन ऐचस्तात्परकरणात् कृष्णैकत्वं गङ्गौघः इत्यादौ द्विमात्र एव ऐच् न तु त्रिमात्रः ।

**आद्गुणः ६।१।८७** ॥ अवर्णादचि[१] परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत्** १।३।२॥ उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण्रपरः** १।१।५१ ॥ ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स[२] रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥ **लोपः शाकल्यस्य** ८।३।१९ ॥ अवर्णपूर्वयोः[३] पदान्तयोर्यवयोर्लोपो वाऽशि परे ॥ **पूर्वत्रासिद्धम्** ८।१।१ ॥ सपादसप्ताध्यायीं[४] प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । हरइह, हरयिह । विष्णइह, विष्णविह ॥ **वृद्धिरादैच्** १।१।१ ॥ आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि** ६।१।८८ ॥ आदेचि[५] परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु** ६।१।८९ ॥ अवर्णादेजाद्यो[६] रेत्येधत्योरूठि[७][८][९] च परे

---

१ 'इकोयणचि' इत्यतः अचीत्यनुवर्तते । एकः पूर्वपरयोरित्यधिकारः 'षष्ठी स्थानेयोगा' इति परिभाषा तु जजागरीति । २ रपरो लपरश्च उक्तमिदं 'लण्मध्ये त्वित्संज्ञक' इत्यत्र । ३ अत्र, भोभगो अघो पूर्वयोरप्यनुवृत्तिसम्भवेऽपि 'ओतो गार्ग्यस्ये' ति सूत्रेण ओकारान्तात्परयोर्नित्यलोपरूपविशेषविधानादाह अवर्णपूर्वयोरिति 'भोभगो' इति सूत्रादशि 'व्योर्लघु' ति सूत्राद्वयोरिति चानुवर्तते । ४ अधिकारोऽयम् । अधिकारत्वेन लब्धार्थमाह । सपादेति त्रिपाद्यामिति च । 'एकः पूर्वपरयोः' इत्यधिकारः । स्वदेशे वाक्यार्थे विना उत्तरसूत्रे एकवाक्यतापन्नत्वमधिकारत्वम् । ५ 'आद्गुणः' इत्यत आदित्यनुवर्तते । ६ 'वृद्धिरेची' त्यत एचीति योग्यत्वादेचीति एत्येधत्योरित्यस्यैव विशेषणं न ऊठोऽसम्भवात् इत्याशयेनाह । एजाद्योरिति । एङि पररूपं आद्गुणः इत्यस्यापवादोऽयम् । ७ (इण् गतौ) ८ (एध वृद्धौ ।) ९ वाहऊठ् इत्यनेन ऊठ् ।

वृद्धिरेकादेशः स्यात् । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः माभवान्प्रेदिधत् । ( अक्षादूहिन्यामुपसंख्यानम् ) अक्षौहिणी[1] सेना । ( प्रादूहोढोढ्येषैष्येषु ) प्रौहः प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । (ऋते च तृतीयासमासे ) सुखेन ऋतः,सुखार्तः । तृतीयेति किम् । परमर्तः[2] ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) प्रार्णम् । वत्सतरार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे १।४।५९॥** प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः ॥ **भूवादयो[3] धातवः १।३।१॥** क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ ६।१।९१ ॥** अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः[4] स्यात् । प्रार्च्छति ॥ **एङि पररूपम् ६।१।९४॥** आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ॥ **अचोऽन्त्यादि टि १।१।६४ ॥** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् )तच्च टेः । शकन्धुः[5] कर्कन्धुः[6] । मनीषा । आकृतिगणोऽयम् । मार्तण्डः ॥ **ओमाङोश्च ६।१।९५ ॥** ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायोंनमः । शिव एहि ॥

---

१ ऊहः समूहः सोऽस्त्यस्याः सा ऊहिनी अक्षाणां ऊहिनी अक्षौहिणी. नतु अक्षाणां ऊहो अस्याऽस्तीति विग्रहः । २ परमश्चासौ ऋतश्च । ३ भूश्च वाश्च भूवौ आदिश्च आदिश्च ( एकशेषे ) आदी ( व्यवस्थाप्रकारवाचिनावादिशब्दौ ) भुवौ आदी येषां भूप्रभृतयो वा सदृशाः क्रियावाचिनश्चेत्यर्थः। तदेतदाह क्रियावाचिन इत्यादि । ४ अवर्णान्तात् 'आद्गुणः' इत्यत आत् 'उपसर्गादृती' त्यतः उपसर्गात् 'धातौ' इति चानुवर्तते । वृद्धिरेचीत्यस्यापवादोऽयम् ५ शकानां देशविशेषाणां अन्धुः कूपः शकन्धुः ६ कर्कणां राजविशेषाणां अन्धुः कर्कन्धुः ।

**अन्तादिवच्च ६।१।८५॥** योऽयमेकादेशः स पूर्वस्यान्तवत्, परस्यादिवत् स्यात्।[1] शिवेहि। **अकः सवर्णे दीर्घः ६।१।१०१॥** अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्।[2] दैत्यारिः। श्रीशः। विष्णूदयः। होतॄकारः॥ **एङः पदान्तादति ६।१।१०९॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव॥ विष्णोऽव॥ **सर्वत्र विभाषा गोः ६।१।१२२॥** लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः[3] स्यात् पदान्ते। गो अग्रम्, गोऽग्रम्। एङन्तस्य किम्। चित्रग्वग्रम्। पदान्ते किम्। गोः। **अनेकाल् शित्सर्वस्य १।१।५५॥** इति प्राप्ते॥ **ङिच्च १।१।५३॥** ङिदनेकाल्प्यन्तस्यैव स्यात्॥ **अवङ् स्फोटायनस्य ६।१।१२३॥** पदान्ते एङन्तस्य गोरवङ् वा स्यादचि। गवाग्रम्। पदान्ते किम्। गवि॥ **इन्द्रे च ६।१।१२४॥** गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥ **दूराद्धूते च ८।२।८४॥** दूरात् सम्बोधने वाक्यस्य[4] टेः प्लुतो वा स्यात्॥ **प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५॥** एतेऽचि प्रकृत्या स्युः।[5] आगच्छ कृष्ण ३ अत्र गौश्चरति॥ **ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११॥** ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरीएतौ। विष्णूइमौ। गङ्गेअमू॥[6] **अदसो मात् १।१।१२॥** अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः।

---

१ 'शिव+आ+इहि' इत्यवस्थायां धातूपसर्गकार्यत्वेनान्तरङ्गत्वात्प्रथमतः 'आ+इ' इत्यत्र आद्गुणे 'अन्तादिवच्च' इत्यनेन ओ इत्यस्य आङ्त्वे ओमाङोश्च इत्यनेन पररूपे शिवेहि इत्यभिप्रायः। २ अकोऽकिदीर्घः इत्येव सुवचम्॥ ३ प्रकृतेर्यथास्थितस्य भवनं प्रकृतिभावः॥ ४ वाक्यस्य अन्त्याच इत्यर्थः। ५ प्लुतसंज्ञकाः प्रगृह्यसंज्ञकाश्च। ६ अदस्शब्दस्य मकारात्।

रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र । असति मादग्रहणे एकारोऽप्यनुवर्तेत ॥ **चादयोऽसत्त्वे १।४।५७॥** अद्रव्यार्थाश्चादयो निपाताः स्युः ॥ **प्रादयः १।४।५८॥** एतेऽपि तथा स्युः ॥ **निपात एकाजनाङ्[1] १।१।१४॥** एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ[2] इन्द्रः । उ[3] उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र[4] ङित् । ईषदुष्णम् ओष्णम् ॥ **ओत् १।१।१५॥** ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥ **सम्बुद्धौ शाकल्यस्येतावनार्षे १।१।१६॥** सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति[5] ॥ **मय उञो वो वा ८।३।३३॥** मयः परस्य उञो वो वा स्यात् अचि । किम्वुक्तम्, किंमु उक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७॥** पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रिअत्र, चक्र्यत्र । पदान्ता इति किम् ॥ **अचो रहाभ्यां द्वे ८।४।४६॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ । ( न समासे ) वाप्यश्वः ॥ **ऋत्यकः ६।१।१२८॥** ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्मऋषिः ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत्[6] ॥ **इत्यच्सन्धिः ॥**

---

१ एकश्चासौ अच एकाच् तद्रूपो निपात इत्यर्थः । अनाङ् इति पर्युदासाश्रयणात्कर्मधारयः २ इ वितर्के ३ उ विस्मये ४ ईषदर्थे क्रियायोगे चेत्यर्थः । उक्तं च भाष्ये । 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥ ५ पक्षे 'निपात एकाजनाङ्' इत्यनेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्य' ति प्रकृतिभावः । ६ अत्र कुत्वं श्चुत्वं वा न कृतम् स्पष्टप्रतिपत्त्यर्थम् । एवमचूत्वमित्यादि ।

## अथ हल्सन्धिप्रकरणम्

**स्तोः श्चुना श्चुः ८।४।४०॥** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥ **शात् ८।४।४४॥** शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः॥ **ष्टुना ष्टुः ८।४।४१॥** स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे॥ **न पदान्ताट्टोरनाम् ८।४।४२॥** पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात्। षट्सन्तः। षट्ते। पदान्तात्किम्। ईट्टे। टोः किम्। सर्पिष्टमम्। (अनाम्नवतिनगरीणामिति वाच्यम्) षण्णाम्। षण्णवतिः। षण्णगर्यः॥ **तोः षि ८।४।४३॥** तवर्गस्य षकारे परे न ष्टुत्वम्। सन्षष्ठः॥ **झलां जशोऽन्ते ८।२।३९॥** पदान्ते झलां जशः स्युः। वागीशः॥ **यरोऽनुनासिकेऽनुनासिको वा ८।४।४५॥** यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः। एतद्मुरारिः। (प्रत्यये भाषायां नित्यम्) तन्मात्रम्। चिन्मयम्॥ **तोर्लि ८।४।६०॥** तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः विद्वाँल्लिखति। नस्यानुनासिको लः॥ **उदः स्थास्तम्भोः पूर्वस्य ८।४।६१॥** उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। **तस्मादित्युत्तरस्य १।१।६७॥** पञ्चमीनिर्देशेन

---

१ स्तोरिति समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। श्चुना श्चुः इत्यपि तथा। एवमग्रेऽपि ष्टुना ष्टुरित्यत्र। २ 'नपदान्तादित्यतो' नेति 'तोः षि' इत्यतश्च तोरित्यनुवर्त्याह शात्परस्य तवर्गस्येति। ३ सर्पिस् तमप् इत्यवस्थायां 'ह्रस्वात्तादौ तद्धिते' इति षत्वेन ष्टुना ष्टुः इति टुत्वम्। ४ पदान्तस्य किम्। वेद्मि स्तुभ्नाति। ५ 'तस्मिन्निति निर्दिष्टे' इति अनुवर्तते तस्य निर्दिष्टादिति विभक्तिविपरिणामेनान्वयः। तत्फलितवृत्तौ लिखति।

क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **आदेः परस्य १।१।५४॥** परस्य[1] यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥ **झरो झरि सवर्णे ८।४।६५॥** हलः[2] परस्य झरो वा लोपः स्यात् सवर्णे झरि ॥ **खरि च ८।४।५५॥** खरि परे झलां चरः स्युः । इत्यदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥ **झयो होऽन्यतरस्याम् ८।४।६२॥** झयः परस्य हस्य वा पूर्वसवर्णः[3] स्यात् । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः, वाग्हरिः ॥ **शश्छोऽटि ८।४।६३** पदान्तात् झयः परस्य शस्य छो वास्यादटि । तद् शिव इत्यत्र दस्य चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । ( छत्वममीति वाच्यम् ) तच्छ्लोकेन ॥ **मोऽनुस्वारः ८।३।२३॥** मान्तस्य[4] पदस्यानुस्वारः स्याद्धलि । हरिं वन्दे ॥ **नश्चापदान्तस्य झलि ८।३।२४॥** नस्य मस्य[5] चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् । मन्यसे । **अनुस्वारस्य ययि परसवर्णः ८।४।५८॥** स्पष्टम् । शान्तः । **वा पदान्तस्य ८।४।५९॥** पदान्तस्य अनुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ ८।३।२५॥** क्विबन्ते[6] राजतौ परे

---

१ परस्येत्यर्थः इदं तु परस्येत्यस्यावृत्त्या लभ्यते । २ 'हलो यमां यमि लोपः' इत्यतो हल इति लोप इति च' 'झयो होन्यतरस्या'मित्यतोऽन्यतरस्यामिति चानुवर्तते । ३ 'उदः स्थास्तम्भोः पूर्वस्य' इत्यतः पूर्वस्येत्यनुवर्तते । ४ 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्य विपरिणमय्य 'हलि सर्वेषा'मित्यतो हलीत्यनुवर्त्याह मान्तस्येति । ५ चकारान्मस्येत्यनुवर्तते । ६प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् इति परिभाषया क्विबन्ते इति ।

समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे वा ८।३।२६॥** मपरे[1] हकारे परे मस्य मो वा स्यात् । किम्ह्मलयति, किं ह्मलयति । ( यवलपरे यवला वा ) कियँ्ह्यः, किंह्यः । किवँ्ह्वलयति, । किंह्वलयतिं किलँ्ल्हादयति, किं ल्हादयति ॥ **नपरे नः ८।३।२७॥** नपरे हकारे परे मस्य नो वा स्यात् । किन्हुँते, किंन्हुते । **ङः सि धुट् ८।३।२९॥** डात्परस्य सस्य धुड्वा स्यात् ॥ **आद्यन्तौ टकितौ १।१।४६॥** टित्किँतौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । पट्त्सन्तः पट्सन्तः॥**ङ्णोः कुक्टुक् शरि ८।३।२८॥** ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि॥ (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्) प्राङ्ख्षष्ठः,प्राङ्क्षष्ठः,प्राङ्षष्ठः।सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः, सुगण् षष्ठः॥**नश्च ८।३।३०॥** नान्तात्परस्य सस्य धुड्वा स्यात् । सन्त्सः, सन्सः ॥ **शि तुक् ८।३।३१॥** पदान्तस्य सस्य शे परे तुग्वा स्यात् । सञ्छंभुः, सञ्च्छंभुः, सञ्च्शंभुः, सञ्शंभुः॥**ङमो ह्रस्वादचि ङमुण् नित्यम् ८।३।३२॥** ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । **समः सुटि ८।३।५॥** समोरुः स्यात् सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा**

---

१ मः परो यस्मादिति बहुव्रीहिः । तथैव न परे इति च । २ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभिप्रेत्याह । ३ द्वन्द्वात्परश्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धात् टित्किताविल्युक्तम् । ४ पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिः । पौष्करसादिः आचार्यनाम तन्मते इत्यर्थः ५ अछो अचछा अचशा अशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् । ६ परस्य नित्यं पूर्वस्य त वाऽनुनासिकद्योतनार्थं तुशब्दप्रयोगः ।

८।३।२॥ अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् ॥ **अनुनासिकात्परोऽनुस्वारः** ८।३।४॥ अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् ॥ **खरवसानयोर्विसर्जनीयः** ८।३।१५॥ खरि अवसाने च पदान्तस्य रस्य विसर्गः स्यात् । ( संपुंकानां सो वक्तव्यः ) सँस्स्कर्ता, संस्स्कर्ता ॥ **पुमः खय्यम्परे** ८।३।६॥ अम्परे खयि पुमो रुः स्यात् । पुँस्कोकिलः, पुंस्कोकिलः ॥ **नश्छव्यप्रशान्** ८।३।७॥ अम्परे छवि नान्तस्य पदस्य रुः स्यात् ॥ **विसर्जनीयस्य सः** ८।३।३४॥ खरि विसर्जनीयस्य सः स्यात् । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति पदान्तस्येति किम् । हन्ति ॥ **नॄन् पे** ८।३।१०॥ नॄनित्यस्य रुर्वा स्यात् पकारेपरे ॥ **कुप्वोः ≍क≍पौ च** ८।३।३७॥ कवर्गे पवर्गे च विसर्गस्य ≍क≍पौ स्तः, । चाद्विसर्गः।नॄँ≍पाहि, नॄं≍पाहि,नॄँःपाहि, नॄंःपाहि नॄन्पाहि ॥ **तस्य परमाम्रेडितम्** ८।१।२॥ द्विरुक्तस्य परं रूपमाम्रेडितं स्यात् ॥ **कानाम्रेडिते** ८।३।१२॥ कान्नकारस्य रुः स्यादाम्रेडिते । काँस्कान् कांस्कान् ॥ **छे च** ६।१।७३॥ ह्रस्वस्य छेपरे तुगागमः स्यात् । शिवच्छाया ॥ **पदान्ताद्वा** ६।१।७६॥ दीर्घात्पदान्ताच्छे परे तुग् वा स्यात् । लक्ष्मीछाया ॥ लक्ष्मीच्छाया ॥ **इति हल्सन्धिः** ॥

## अथ विसर्गसन्धिप्रकरणम् ॥

**विसर्जनीयस्य सः** ८।३।३४॥ खरि । विष्णुस्त्राता ॥ **वा शरि**

---

१ अनुनासिकादिति ल्यब्लोपे पञ्चमी इत्यत आह अनुनासिकं विहायेति । २ पुमः खय्यम्परे इत्यतः अम्परे इत्यनुवर्तनीयम् । ३ 'ह्रस्वस्य पिति कृति तुक्' इत्यतो 'ह्रस्वस्य' 'तुक्' चेति पदद्वयमनुवर्तते ।

८।३।३६॥ शर्परि विसर्गस्य विसर्गो वा स्यात् । हरिःशेते, हरिश्शेते ॥ **ससजुषो रुः** ८।२।६६॥ पदान्तस्य सस्य सजुषुशब्दस्य च रुः स्यात्॥ **अतो रोरप्लुतादप्लुते** ६।१।११३॥अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च** ६।१।११४॥ अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि** । ८।३।१७॥ एतत्पूर्वस्य रोर्यादेशः स्यादशि । देवाँइह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ **हलि सर्वेषाम्** ८।३। २२॥ भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि** ८।३।६९॥ अन्हो रेफादेशो न तु सुपि अहरहः । अहर्गणः ॥ **रो रि** ८।३।१४॥ रेफस्य रेफे परे लोपः स्यात् ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ६।३।१११॥ ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् । तृढः । वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ॥ **विप्रतिषेधे परं कार्यम्** १।४।२॥ तुल्यबलविरोधे सति परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव।मनोरथः ॥**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ६।१।१३२॥ अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्या-

---

१ इत्यतः स्वादिसन्धिसूत्राणि मुख्यतया विसर्गकार्यत्वाद्विसर्गसन्धावेव ज्ञेयानि अतः सर्वोऽयमत्र विसर्गसन्धिरेव । २ 'एङः पदान्तादति' इति पूर्वरूपम् । ३ लोपः शाकल्यस्येति यलोपे तस्यासिद्धत्वान्न सन्धिः । ४ सर्वेषां मतेन नित्यमित्यर्थः । ५ 'ढोढेलोपः' इत्यतो लोप इत्यनुवर्तते ।

त् हलि नतु नञ्समासे । एष विष्णुः । स शम्भुः अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम् ६।१।१३४॥** स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम् । सैष दशरथीरामः ॥

**इति विसर्गसन्धिः ॥**

## अथ अजन्तपुँल्लिङ्गप्रकरणम् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५॥** धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च १।२।४६॥** कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः॥ **स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२॥** सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ **ङ्याप्प्रातिपदिकात् ४।१।१॥ प्रत्ययः ३।१।१॥ परश्च ३।१।२॥** इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ **सुपः १।४।१०३॥** सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येक-**

---

१ अर्थवदिति किम् । धनंवनमित्यादौ प्रतिवर्णं संज्ञा माभूत् तस्यां च सत्यां स्वादयः स्युः । २ अधातुरिति किम् अहन्नित्यत्र नलोपो माभूत् । ३ ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ्माभूदित्येवमर्थम् । ४ 'तिङस्त्रीणि त्रीणी' त्यतस्त्रीणि त्रीणि तान्येकवचनेत्यतः एकवचनद्विवचनबहुवचनान्येकशः इति चानुवर्तते ।

**योर्द्विवचनैकवचने १।४।२२॥** द्वित्वैकत्वयोरेते स्तः॥ **विरामोऽवसानम् १।४।११०॥** वर्णानामभावोऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ[1]। रामः॥ **सरूपाणामेकशेष एकविभक्तौ १।२।६४॥** एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥ **प्रथमयोः पूर्वसवर्णः ६।१।१०२॥** अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥ **नादिचि ६।१।१०४॥** आदिचि न पूर्वसवर्णदीर्घः॥ **वृद्धिरेचि** रामौ॥ **बहुषु[2] बहुवचनम् १।४।२१॥** बहुत्वविवक्षायां बहुवचनं स्यात्॥ **चुटू १।३।७॥** प्रत्ययाद्यौ[3] चुटू इतौ स्तः॥ **विभक्तिश्च १।४।४०॥** सुप्तिङौ विभक्तिसंज्ञौ स्तः॥ **न[4] विभक्तौ तुस्माः १।३।४॥** विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सस्य नेत्वम्। रामाः। **एकवचनं सम्बुद्धिः २।३।४९॥** सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३॥** यः प्रत्ययो यस्मात् क्रियते तदादि[5] शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात्॥ **एङ्ह्रस्वात्सम्बुद्धेः ६।१।६९॥** एङन्ताद् ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ हे रामाः॥ **अमि पूर्वः ६।१।१०७॥** अकोऽम्यचि पूर्वरूपमेकादेशः स्यात्। रामम् रामौ॥ **लशक्वतद्धिते १।३।८॥** तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥ **तस्माच्छसो नः**

---

१ 'ससजुषोरुः' इति रुत्वं 'खरवसानयोः' इति विसर्गः। २ त्रित्वादिपरार्धान्तसंख्याव्यापकधर्मविशेषो बहुत्वम्। ३ 'आदिर्ञिटुडवः' इत्यतः आदिरिति 'पः प्रत्ययस्य' इत्यतः प्रत्ययस्य इति चानुवर्तते। ४ 'हलन्त्यम्' इत्यस्य निषेधोऽयम्। ५ भवामि भविष्यामि इत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम्।

**पुंसि ६।१।९३॥** पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२॥** अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥ **पदान्तस्य ८।४।३७॥** पदान्तस्य नस्य णत्वं न स्यात् । रामान् । **टाङसिङसामिनात्स्याः ७।१।१२॥** अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥ **सुपि च ७।३।१०२॥** यञादौ सुपि अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ॥ **अतो भिस ऐस् ७।१।९॥** अनेकाल्शित्सर्वस्य । रामैः ॥ **ङेर्यः ७।१।१३॥** अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥ **स्थानिवदादेशोऽनल्विधौ १।१।५६॥** आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपिचेति दीर्घः । रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत् ७।३।१०३॥** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । सुपि किम् । पचध्वम् ॥ **वाऽवसाने ८।४।५६॥** अवसाने झलां चरो वा स्युः । रामात् रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥ **ओसि च ७।३।१०४ ॥** ओसि परे अतोऽङ्गस्यैकारः स्यात् । रामयोः ॥ **ह्रस्वनद्यापो नुट् ७।१।५४ ॥** ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ॥ **नामि ६।४।३ ॥** नामिपरे अजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् । रामे रामयोः । एत्वे कृते ॥ **आदेशप्रत्यययोः**

---

१ 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा नेह प्रवर्तते 'कष्टाय क्रमणे' इति निर्देशेन तस्या अनित्यत्वज्ञापनात् । २ अत्र अनचिचेति द्वित्वपक्षे सस्य खरिचेति चर्त्वेऽपि स एव न तु तकारः प्रयत्नभेदात् ।

८।३।५९॥ इंण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः स्यात् । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥ **सर्वादीनि सर्वनामानि १।१।२७ ॥** सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी ७।१।१७ ॥** अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥ **सर्वनाम्नः स्मै ७।१।१४ ॥** अतः सर्वनाम्नो[2] ङे इत्यस्य स्मै स्यात् । सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ ७।१।१५॥** अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥ **आमि सर्वनाम्नः सुट् ७।१।५२ ॥** अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः ॥ उभशब्दो द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः[3] । डतरडतमौ प्रत्ययौ[4] । "प्रत्ययग्रहणे तदन्तग्रहणमिति" तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न । "यथासङ्ख्यमनुदेशः समानामिति" ज्ञापकात् ॥ **पूर्वप-**

---

१ इण्कोः इत्यधिकारः 'सहेः साडः सः' इति सूत्रात्स इत्यनुवर्तते । २ 'ङेर्यः' इत्यतो ङेरित्यनुवर्तते । ३ अव्ययसर्वनाम्नामकच् प्राक् टेः । ४ "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्, वा बहूनां जातिपरिप्रश्ने डतमच्" इत्युक्तौ । ५ अत्र सूत्रे 'विभाषा जसी' ति सूत्रमनुवर्तते ।

**पुंसि ६।१।९३॥** पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२॥** अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥ **पदान्तस्य ८।४।३७॥** पदान्तस्य नस्य णत्वं न स्यात्। रामान्। **टाङसिङसामिनात्स्याः ७।१।१२॥** अदन्ताट्टादीनामिनादयः स्युः। णत्वम्। रामेण ॥ **सुपि च ७।३।१०२॥** यञादौ सुपि अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ॥ **अतो भिस ऐस् ७।१।९॥** अनेकाल्शित्सर्वस्य। रामैः ॥ **ङेर्यः ७।१।१३॥** अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥ **स्थानिवदादेशोऽनल्विधौ १।१।५६॥** आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपिचेति दीर्घः। रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत् ७।३।१०३॥** झलादौ वहुवचने सुप्यतोऽङ्गस्यैकारः स्यात्। रामेभ्यः। सुपि किम्। पचध्वम् ॥ **वाऽवसाने ८।४।५६॥** अवसाने झलां चरो वा स्युः। रामात् रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य ॥ **ओसि च७।३।१०४ ॥** ओसि परे अतोऽङ्गस्यैकारः स्यात्। रामयोः ॥ **ह्रस्वनद्यापो नुट् ७।१।५४॥** ह्रस्वान्तान्नद्यन्तादावन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्॥ **नामि ६।४।३ ॥** नामिपरे अजन्ताङ्गस्य दीर्घः स्यात्। रामाणाम्। रामे रामयोः। एत्वे कृते ॥ **आदेशप्रत्यययोः**

---

१ 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा नेह प्रवर्तते 'कष्टाय क्रमणे' इति निर्देशेन तस्या अनित्यत्वज्ञापनात्। २ अत्र अनचिचेति द्वित्वपक्षे सस्य खरिचेति चर्त्वेऽपि स एव न तु तकारः प्रयत्नभेदात्।

८।३।५९॥ इंण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः स्यात्। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥ **सर्वादीनि सर्वनामानि १।१। २७॥** सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्॥ **जसः शी ७। १।१७॥** अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥ **सर्वनाम्नः स्मै ७।१।१४॥** अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै॥ **ङसिङ्योः स्मात्स्मिनौ ७।१।१५॥** अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्॥ **आमि सर्वनाम्नः सुट् ७।१।५२॥** अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्वषत्वे सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः॥ उभशब्दो द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। तस्येह पाठोऽकजर्थः। डतरडतमौ प्रत्ययौ। "प्रत्ययग्रहणे तदन्तग्रहणमिति" तदन्ता ग्राह्याः। नेम इत्यर्धे। समः सर्वपर्यायः। तुल्यपर्यायस्तु न। "यथासङ्ख्यमनुदेशः समानामिति" ज्ञापकात्॥ पूर्वप-

---

१ इण्कोः इत्यधिकारः 'सहेः साडः सः' इति सूत्रात्स इत्यनुवर्तते। २ 'ङेर्यः' इत्यतो ङेरित्यनुवर्तते। ३ अव्ययसर्वनाम्नामकच् प्राक् टेः। ४ "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्, वा बहूनां जातिपरिप्रश्ने डतमच्" इत्युक्तौ। ५ अत्र सूत्रे 'विभाषा जसी' ति सूत्रमनुवर्तते।

**रावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४॥** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम् १।१।३५ ॥** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । स्वे स्वाः । आत्मीयाः, आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः[१] । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६॥** एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् पूर्वात् ॥ पूर्वस्मिन् पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पाऽर्धकतिपयनेमाश्च १।१।३३॥** एते जसि उक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । तयः[२] प्रत्ययः । द्वितये द्वितयाः । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । ( तीयस्य[३] ङित्सु वा ) द्वितीयस्मै द्वितीयायेत्यादि । एवं तृतीयः ॥ निर्जरः ॥ **जराया जरसन्यतरस्याम् ७।२।१०१ ॥** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ ( पदाङ्गाधिकारे तस्य च तदन्तस्य च । ) निर्दिश्यमानस्यादेशा भवन्ति[४] ।

---

१ सर्वनामसंज्ञाः । २ 'संख्याया अवयवे तयप्' इत्यनेन तयप् भवति ततस्तदन्ताग्राह्याः । ३ 'द्वेस्तीयः' इत्यनेन शास्त्रेण तीयः प्रत्ययः । ४ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयं निर्दिश्यमानम् ।

(एकदेशविकृतमनन्यवत्) इति जरशब्दस्य जरस्। निर्जरसौ निर्जरसः इत्यादि। पक्षे हलादौ च रामवत् ॥ विश्वपाः । **दीर्घाज्जसि च ६।१।१०५॥** दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् विश्वपौ । **सुडनपुंसकस्य १।१।४३॥** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने १।४।१७॥** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ॥ **यचि भम् १।४।१८॥** यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ **आकडारादेका संज्ञा १।४।१॥** इतऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च ॥ **आतो धातोः ६।४।१४०॥** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् ॥ हरिः । हरी ॥ **जसि च ७।३।१०९॥** ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ॥ **ह्रस्वस्य गुणः ७।३।१०८** ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । हे हरे । हरिम् । हरी हरीन् । **शेषो घ्यसखि १।४।७॥** शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् स्यात् ॥ **आङो नाऽस्त्रियाम् ७।३।१२०॥** घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । हरि-

---

१ अत्र पादादिशब्दा पद्दन्नित्यादिकार्यत्वेन लिखितास्तस्य छन्दोऽधिकारत्वात् पदादिशब्दानां लोके दृष्टत्वात्कार्यविशेषाभावाच्च । २ शेषः किम् । मत्यै । नदीसंज्ञापक्षे घिसंज्ञायां सत्यामाण्नद्या इत्याडागमे घेर्ङितीतिगुणे अयादेशे च मतये इति स्यात् ।

**रावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४॥** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे पूर्वाः। असंज्ञायां किम्। उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्। दक्षिणा गाथकाः। कुशला इत्यर्थः॥ **स्वमज्ञातिधनाख्यायाम् १।१।३५॥** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात्। स्वे स्वाः। आत्मीयाः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः[१]। ज्ञातयोऽर्था वा॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा स्यात्। अन्तरे अन्तरा वा गृहाः। बाह्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः। परिधानीया इत्यर्थः॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६॥** एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात् पूर्वात्॥ पूर्वस्मिन् पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १।१।३३॥** एते जसि उक्तसंज्ञा वा स्युः। प्रथमे प्रथमाः। तयः[२] प्रत्ययः। द्वितये द्वितयाः। शेषं रामवत्। नेमे नेमाः। शेषं सर्ववत्। (तीयस्य ङित्सु वा) द्वितीयस्मै द्वितीयायेत्यादि[३]। एवं तृतीयः॥ निर्जरः॥ **जराया जरसन्यतरस्याम् ७।२।१०१॥** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ। (पदाङ्गाधिकारे तस्य च तदन्तस्य च।) निर्दिश्यमानस्यादेशा[४] भवन्ति।

---

१ सर्वनामसंज्ञा। २ 'संख्याया अवयवे तयप्' इत्यनेन तयप् भवति ततस्तदन्ताग्राह्याः। ३ 'द्वेस्तीयः' इत्यनेन शास्त्रेण तीयः प्रत्ययः। ४ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयं निर्दिश्यमानम्।

(एकदेशविकृतमनन्यवत्) इति जरशब्दस्य जरस्। निर्जरसौ निर्जरसः इत्यादि। पक्षे हलादौ च रामवत्॥ विश्वपाः। **दीर्घाज्जसि च ६।१।१०५॥** दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः। वृद्धिः। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम् विश्वपौ। **सुडनपुंसकस्य १।१।४३॥** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥ **स्वादिष्वसर्वनामस्थाने १।४।१७॥** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्॥ **यचि भम् १।४।१८॥** यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात्॥ **आकडारादेका संज्ञा १।४।१॥** इतऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च॥ **आतो धातोः ६।४।१४०॥** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात्। अलोऽन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्। हाहान्॥ हरिः। हरी॥ **जसि च ७।३।१०९॥** ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे। हरयः॥ **ह्रस्वस्य गुणः ७।३।१०८** ह्रस्वस्य गुणः स्यात् सम्बुद्धौ। हे हरे। हरिम्। हरी हरीन्। **शेषो घ्यसखि १।४।७॥** शेष इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् स्यात्॥ **आङो नाऽस्त्रियाम् ७।३।१२०॥** घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। हरि-

---

१ अत्र पादादिशब्दा पद्न्नित्यादिकार्यत्वेन लिखितास्तस्य छन्दोऽधिकारत्वात् पदादिशब्दानां लोके दृष्टत्वात्कार्यविशेषाभावाच्च। २ शेषः किम्। मत्यै। नदीसंज्ञापक्षे घिसंज्ञायां सत्यामाण्नद्या इत्याडागमे घेर्ङितीतिगुणे अयादेशे च मतये इति स्यात्।

**रावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४॥** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम् १।१।३५ ॥** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । स्वे स्वाः । आत्मीयाः, आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः[1] । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६॥** एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् पूर्वात् ॥ पूर्वस्मिन् पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १।१।३३॥** एते जसि उक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । तयः[2] प्रत्ययः । द्वितये द्वितयाः । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । ( तीयस्य ङित्सु वा ) द्वितीयस्मै द्वितीयायेत्यादि । एवं तृतीयः[3] ॥ निर्जरः ॥ **जराया जरसन्यतरस्याम् ७।२।१०१ ॥** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । ( पदाङ्गाधिकारे तस्य च तदन्तस्य च । ) निर्दिश्यमानस्यादेशा[4] भवन्ति ।

---

१ सर्वनामसंज्ञाः । २ 'संख्याया अवयवे तयप्' इत्यनेन तयप् भवति ततस्तदन्ताग्राह्याः । ३ 'द्वेस्तीयः' इत्यनेन शास्त्रेण तीयः प्रत्ययः । ४ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयं निर्दिश्यमानम् ।

(एकदेशविकृतमनन्यवत्) इति जरशब्दस्य जरस्। निर्जरसौ निर्जरसः इत्यादि । पक्षे हलादौ च रामवत् ॥ विश्वपाः । **दीर्घाज्जसि च** ६।१।१०५॥ दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् विश्वपौ । **सुडनपुंसकस्य** १।१।४३॥ स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य ॥ **स्वादिष्वसर्वनामस्थाने** १।४।१७॥ कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ॥ **यचि भम्** १।४।१८॥ यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ **आकडारादेका संज्ञा** १।४।१॥ इतऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च ॥ **आतो धातोः** ६।४।१४०॥ आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् ॥ हरिः । हरी ॥ **जसि च** ७।३।१०९॥ ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ॥ **ह्रस्वस्य गुणः** ७।३।१०८ ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । हे हरे । हरिम् । हरी हरीन् । **शेषो घ्यसखि** १।४।७॥ शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् स्यात् ॥ **आङो नाऽस्त्रियाम्** ७।३।१२०॥ घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । हरि-

---

१ अत्र पादादिशब्दा पद्दन्नित्यादिकार्यत्वेन लिखितास्तस्य छन्दोऽधिकारत्वात् पदादिशब्दानां लोके दृष्टत्वात्कार्यविशेषाभावाच्च । २ शेषः किम् । मत्यै । नदीसंज्ञापक्षे घिसंज्ञायां सत्यामाण्नद्या इत्याडागमे घेर्ङितीतिगुणे अयादेशे च मतये इति स्यात् ।

भ्याम् । हरिभिः ॥ **घेर्ङिति ७।३।१११॥** घिसंज्ञस्य ङिति सुपि गुणः स्यात् । हरये ॥ **ङसिङसोश्च ६।१।११०॥** एङोङसिङसोरति पूर्वरूपमेकादेशः स्यात् । हरेः हर्योः । हरीणाम् ॥ **अच्च घेः ७।३।११९॥** इदुद्भ्यामुत्तरस्य ङेरौत् स्यात् घेरन्तादेशश्चाकारः । हरौ । हरिषु । एवं कव्यादयः ॥ **अनङ् सौ ७।१।९३॥** सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा १।१।६५॥** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥ **सर्वनामस्थाने चासम्बुद्धौ ६।४।८॥** नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल्प्रत्ययः १।२।४१॥** एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥** हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥ **नलोपः प्रातिपदिकान्तस्य ८।२।७॥** प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः स्यात् । सखा ॥ **सख्युरसम्बुद्धौ ७।१।९२॥** सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ **अचो ञ्णिति ७।२।११५॥** अजन्ताङ्गस्य वृद्धिर्ञ्णिति णिति च परे । सखायौ । सखायः । हे सखे । सखायम् । सखायौ सखीन् । सख्या । सख्ये ॥ **ख्यत्यात्परस्य ६।१।११२॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥ **औत् ७।३।११८॥** इदुद्भ्यां परस्य

---

१ तिपा सहचरितस्य सिपोग्रहणात्सि चोग्रहणं नास्ति । 'सहचरिताऽसहचरितयोः सहचरितस्यैव ग्रहणम्' । अभैत्सीत् । २ 'मृजेर्वृद्धिरित्यतो वृद्धिरित्यनुवर्तते' अङ्गस्येति चानुवृत्तमत्राविशिष्यते विशेषणेन च तदन्तविधिः इत्याशयेन आह अजन्ताङ्गस्येति ।

ङेरौत् स्यात् । सख्यौ शेषं हरिवत् ॥ **पतिः समास एव १।४।८ ॥** [१]पतिशब्दः समास एव घिसंज्ञः । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥ **बहुगणवतुडति सङ्ख्या १।१।२३॥** एते सङ्ख्यासंज्ञाः स्युः॥**डति च १।१।२५॥** डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् ॥**षड्भ्यो लुक् १।१।२७॥** षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥ **प्रत्ययस्य लुक्श्लुलुपः १।१।६१** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२॥** प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥ **न लुमताऽङ्गस्य १।१।६३॥** [१]लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । [२]कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युष्मदस्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः त्रीन् त्रिभिः । त्रिभ्यः २ **त्रेस्त्रयः ७।१।५३॥** त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि [३]प्रियत्रयाणाम् ॥ **त्यदादीनामः ७।२।१०२॥** एषामकारोऽन्तादेशः स्याद्विभक्तौ । ( द्विपर्यन्तानामेवेष्टिः ) द्वौ । द्वौ । द्वाभ्याम् ३ । द्वयोः २ । पाति लोकमिति पपीः । सूर्यः ॥ **दीर्घाज्जसि च ६।१।१०५॥** पप्यौ । पप्यः । हे पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये पपीभ्यः २ । पप्यः पप्योः ।

---

१ लुक् श्लु लुप् एते लुमन्तः २ का सङ्ख्या येषां ते । 'कति किमः सङ्ख्या परिमाणे डतिचे'ति डित्वाट्टिलोपः । ३ गौणत्वेतु नेति केचित् । ४ सर्वाद्यन्तर्गणस्त्यदादिः ॥

दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः । पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । बह्वचः श्रेयस्यो यस्य स बहुश्रेयसी ॥ **यू स्त्र्याख्यौ नदी १।४।३** ॥ ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ( प्रथमलिङ्गग्रहणं च ) पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ **अम्बार्थनद्योर्ह्रस्वः ७।३।१०७**॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । हे बहुश्रेयसि ॥ **आण्नद्याः ७।३।११२**॥ नद्यन्तात्परेषां ङितामाडागमः स्यात् ॥ **आटश्च ६।१।९०** ॥ आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयसीनाम् ॥ **ङेराम्नद्याम्नीभ्यः ७।३।११६** ॥ नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम् स्यात् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७**॥ श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रूइत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते । **एरनेकाचोऽसंयोगपूर्वस्य ८।४।८२**॥ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो योधातुस्तदन्तस्यानेकाचोऽङ्गस्य यण्स्यादजादौ प्रत्यये । प्रध्यौ । प्रध्यम् । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । नियः । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ यवक्रियौ ॥ **गतिश्च १।४।६०**॥ प्रादयः[3] क्रियायोगे गतिसंज्ञाः स्युः॥( गतिकारकेतरपूर्वपदस्य यण् नेष्यते )

---

१ क्लीबन्तवातप्रमीशब्दस्य अमि शसि ङौ च विशेषः । वातप्रम्यं वातप्रम्यः वातप्रम्यि । २ 'घेर्ङिति' त्यतो ङितीत्यनुवर्तते तद्विपरिणम्याह ङितामिति । ३ 'प्रादयः' 'उपसर्गाः क्रियायोगे' इति सूत्रद्वयमनुवर्त्य [illegible] इति ।

शुद्धधियौ ॥ **न भूसुधियोः ८।४।८५॥** एतयोरचि सुपि यण्न। सुधियौ। सुधियः इत्यादि। सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ सुत्यौ। सुख्युः सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥ **तृज्वत्क्रोष्टुः ७।१।९५॥** असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्य क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥**ऋतो ङि सर्वनामस्थानयोः ७।३।११०॥** ऋतोऽङ्गस्य गुणः स्यात् ङौ सर्वनामस्थाने च। इति प्राप्ते॥ **ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४।** ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ॥**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११॥** अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्॥ **विभाषा तृतीयादिष्वचि ७।१।९७॥** अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा।क्रोष्ट्रे॥ **ऋत उत् ६।१।१११॥** ऋतो ङसिङसोरति उकार एकादेशः स्यात्। रपरः॥ **रात्सस्य ८।२।२४॥** रेफात्संयोगान्तस्य सस्यैव लोपो नाऽन्यस्य। रस्य विसर्गः। क्रोष्टुः। क्रोष्ट्रोः (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्। हूहूः। हूव्हः। हूहूम्। इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। खलपूः॥ **ओः सुपि ६।४।८३॥** धात्ववयवसंयोगपूर्वो न भवति

---

१ सुतमिच्छतीति सुतीः। २ 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रमनुवर्तते। ३ अव्युत्पत्तिपक्षे गृहीत्वाऽऽह अबादीनामिति। ४ तृतीयादिविभक्तिषु। ५ ङसिङसोश्चेति सूत्रमनुवर्तते। ६ 'एरनेकाच' इति सूत्रं एरिति पदं विहायानुवर्तते।

य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ खलप्वः। एवं सुल्वादयः। स्वभूः स्वभुवौ। स्वभुवः। वर्षाभूः॥ **वर्षाभ्वश्च ६।४।८४॥** अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ। एवं करभूः। धाता। हे धातः धातारौ। धातारः (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम्। एवं नप्त्रादयः। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्[1] तेनेह न। पिता। पितरौ पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः। ना। नरौ॥ **नृ च ६।४।६॥** अस्य नामि वा दीर्घः स्यात्॥ नृणाम् नॄणाम्॥ **गोतो णित् ७।१।९०॥** ओकाराद्विहितं[2] सर्वनामस्थानं णिद्वत् स्यात् गौः। गावौ। गावः॥ **औतोऽम्शसोः ६।१।९३॥** ओतोऽम्शसोरचि आकार एकादेशः स्यात्[3]। गाम्। गावौ गाः। गवा। गवे गोः २। इत्यादि॥ **रायो हलि ७।२।८५॥** रैशब्दस्याकारादेशो हलि विभक्तौ॥ राः रायौ। रायः। राभ्यामित्यादि। ग्लौः। ग्लावौ। ग्लावः। ग्लावम्[4]। ग्लावौ ग्लावः। ग्लौभ्यामित्यादि॥

**इत्यजन्ताः पुल्लिङ्गाः॥**

## ॥ अथाजन्तस्त्रीलिङ्गप्रकरणम्॥

रमा॥ **औङ आपः ७।१।१८॥** आबन्तादङ्गात् परस्यौङः शी

---

१ उणादिनिष्पन्नानां तृजन्तानां चेद्भवति तर्हि नप्त्रादीनामेव। तेन पितृमातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। समर्थसूत्रे उद्गातारः इति भाष्यप्रयोगात्। २ ओतो णिदिति वाच्यं तेन सुद्यो शब्दस्य सुद्यौः इत्यादि गोवत्। ३ औतोम्शसोरितीह न प्रवर्तते। ऐ औजितिसूत्रेण सावर्ण्याभावज्ञापनात्। ४ 'हल्ङ्याब्भ्यो दीर्घादिति' सुलोपः।

स्यात् ॥ औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ **सम्बुद्धौ च ७।३।१०६॥** आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥ **आङि चापः ७।३।१०५॥** आङि ओसि चाप एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ॥ **याडापः ७।३।११३॥** आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिः । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४॥** आवन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै सर्वस्याः । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आवन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ १।१।२८॥** अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै उत्तरपूर्वायै ( तीयस्येति वा संज्ञा । ) द्वितीयस्यै । एवं । तृतीया । अम्बार्थेति ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल । जरा । जरसौ इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतीः । मत्या ॥ **ङिति ह्रस्वश्च १।४।६॥** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै । मतये । मत्याः २ मतेः २ ॥ **इदुद्भ्याम् ७।३।११७॥** इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम् स्यात् ॥ मत्याम् । मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९॥** स्त्रीलिङ्गयोरेतयोरेतौ स्तो

---

१ स्त्रीत्वान्नत्वाभावः । २ 'ओसिचे' त्यनुवर्तते 'बहुवचने झल्येदि' त्यतः एदिति च । ३ विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् । ४ इदं लुप्तविभक्तिकम् ।

विभक्तौ ॥ **अचि र ऋतः ७।२।१००॥** तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । आमि नुट्॥ **न तिसृचतसृ ६।४।४॥** एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । तिसृषु । द्वे[1] । द्वे । द्वाभ्याम् द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । गौरी । गौर्यौ । गौर्यः । हे[2] गौरि । गौर्यै । इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । **स्त्रियाः ६।३।७९॥** अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥ **वाम्शसोः ६।४।८०॥** अमि शासि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु । श्रीः । श्रियौ । श्रियः । **नेयङुवङ्स्थानावस्त्री १।४।४॥** इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रियै । श्रिये । श्रियाः । श्रियः ॥ **वामि १।४।५॥** इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम् श्रियाम् । श्रियि । श्रियाम् । धेनुर्मतिवत् ॥ **स्त्रियां च ७।१।९६॥** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥ **ऋन्नेभ्यो ङीप् ४।१।५॥** ऋदन्तेभ्यो नान्तेभ्यश्च

---

१ त्यदादीनामः इत्यात्वे अदन्ताट्टाप् । 'औङआपः' प्रथमाद्वितीययोर्द्विवचनस्य शी । 'आद्गुणः'। २ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । ३ स्त्रियं अतिक्रांतः अतिस्त्रि अत्र इयङ् आदेशो विकल्पो भवति । उक्तं च । 'गुणनाभावौ त्वनुड्भिः परत्वात्पुंसि बाध्यते। क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥ ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया । इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने । ४अवी तन्त्री तरी लक्ष्मी धी ह्री श्रीणामुदाहृतः । सप्तानामपि शब्दानां सुलोपो न कदाचन ।

